॥ दुर्गाचन्द्रकलास्तुती ॥

वेधोहरीश्वरस्तुत्यां विहर्त्रीं विन्ध्यभूधरे ।
हरप्राणेश्वरीं वन्दे हन्त्रीं विबुधविद्विषाम् ॥ १ ॥

अभ्यर्थनेन सरसीरुहसम्भवस्य
त्यक्तवोदिता भगवदक्षिपिधानलीलाम् ।
विश्वेश्वरी विपदपागमने पुरस्तात्
माता ममास्तु मधुकैटभयोर्निहन्त्री ॥ २ ॥

प्राङ्निर्जरेषु निहतैर्निजशक्तिलेशैः
एकोभवद्भिरुदिताखिललोकगुप्त्यै ।
सम्पन्नशस्त्रनिकरा च तदायुधस्यैः
माता ममास्तु महिषान्तकरी पुरस्तात् ॥ ३ ॥

प्रालेयशैलतनया तनुकान्तिसम्पत्-
कोशोदिता कुवलयच्छविचारुदेहा ।
नारायणी नमदभीप्सितकल्पवल्ली
सुप्रीतिमावहतु शुम्बनिशुम्भहन्त्री ॥ ४ ॥

विश्वेश्वरीति महिषान्तकरीति यस्याः
नारायणीत्यपि च नामभिरङ्कितानि ।
सूक्तानि पङ्कजभुवा च सुरर्षिभिश्च
दृष्टानि पावकमुखैश्च शिवां भजे ताम् ॥ ५ ॥

उत्पत्तिदैत्यहननस्तवनात्मकानि
संरक्षकाण्यखिलभूतहिताय यस्याः ।
सूक्तान्यशेषनिगमान्तविदः पठन्ति
तां विश्वमातरमजस्रमभिष्टवीमि ॥ ६ ॥

ये वैप्रचित्तपुनसुत्थितशुम्भमुख्यैः
दुर्भिक्षघोरसमयेन च कारितासु ।
आविष्कृतास्त्रिजगदार्तिषु रूपभेदाः
तैरम्बिका समभिरक्षतु मां विपद्भ्यः ॥ ७ ॥

सूक्तं यदीयमरविन्दभवादि दृष्टं
आवर्त्य देव्यनुपदं सुरथः समाधिः ।
द्वावप्यवापतुरभीष्टमनन्यलभ्यं

तामादिदेवतरुणीं प्रणमामि देवीम् ॥ ८ ॥

माहिष्मतीतनुभवं च रुरूं च हन्तुं
आविष्कृतैर्निजरसादवतारभेदैः ।
अष्टादशाहतनवाहतकोटिसंख्यैः
अम्बा सदा समभिरक्षतु मां विपद्भ्यः ॥ ९ ॥

एतच्चरित्रमखिलं लिखितं हि यस्याः
सम्पूजितं सदन एव निवेशितं वा ।
दुर्गं च तारयति दुस्तरमप्यशेषं
श्रेयः प्रयच्छति च सर्वमुमां भजेताम् ॥ १० ॥

यत्पूजनस्तुतिनमस्कृतिंभिर्भवन्ति
प्रीताः पितामह रमेशहरास्त्रयोऽपि ।
तेषामपि स्वकगुर्णर्ददती वपूंषि
तामीश्वरस्य तरुणीं शरणं प्रपद्ये ॥ ११ ॥

कान्तारमध्यदृढलग्नतयाऽवसन्ना
मग्नाश्चवारिधिजले रिपुभिश्च रुद्धाः ।
यस्याः प्रपद्य चरणौ विपदस्तरन्ति
सा मे सदाऽस्तु हृदि सर्वजगत्सवित्री ॥ १२ ॥

बन्धे वधे महति मृत्युभये प्रसक्ते
वित्तक्षये च विविधे य महोपतापे ।
यत्पादपूजनमिह प्रतिकारमाहुः
सा मे समस्तजननी शरणं भवानी ॥ १३ ॥

बाणासुरप्रहितपन्नगबन्धमोक्षः
तद्बाहुदर्पदलनादुषया च योगः ।
प्राद्युम्निना द्रुतमलभ्यत यत्प्रसादात्
सा मे शिवा सकलमप्यशुभं क्षिणोतु ॥ १४ ॥

पापः पुलस्त्यतनयः पुनरुत्थितो मां
अद्यापि हर्तुमयमागत इत्युदीतम् ।
यत्सेवनेन भयमिन्दिरयाऽवधूतं
तामादिदेवतरुणीं शरणं गतोऽस्मि ॥ १५ ॥

यद्ध्यानजं सुखमवाप्यमनन्तपुण्यैः

साक्षात्तमच्युत परिग्रहमाश्व वापुः
गोपांगनाः किल यदर्चन पुण्यमात्रा
सा मे सदा भगवती भवतु प्रसन्ना ॥ १६ ॥

रात्रिं प्रपद्य इति मन्त्रविदः प्रपन्नान्
उद्बोध्य मृत्युवधि मन्यफलैः प्रलोभ्य ।
बुद्ध्वा च तद्विमुखतां प्रतनं नयन्तीं
आकाशमादिजननीं जगतां भजे ताम् ॥ १७ ॥

देशकालेषु दुष्टेषु दुर्गाचन्द्रकलास्तुतिः ।
सन्ध्ययोरनुसन्धेया सर्वापद्विनिवृत्तये ॥ १८ ॥

श्रीमदपय्यदीक्षितविरचिता दुर्गाचन्द्रकलास्तुतिः ।